।। शिवाभ्यां नमः ।।

## ।। डोळा नवरत्नमालिका ।।

श्रीमद्भिरक्षिवलनैः परितस्सरोज-
श्रेणीं किरन्नधिहिरण्मयदिव्यडोळम्।
यः श्रीधराकलितमाकलयन् मुदा त-
दान्दोळनं स्फुरति नन्दशिशुं तमीडे।। १

आन्दोळनेन मणिसुन्दरडोळिकायां
स श्रीधरोपकलितानि समश्नुवानः।
मन्दस्मितेन मधुरेण निजान् विधिन्वन्
नन्दार्भको भवतु मे नयनाध्वनीनः।। २

माणिक्यकुण्डल मनोहरतारहारा-
द्युद्दामभूषमुपबर्हनिविष्टबाहुम्।
तं श्रीधराश्रितपदं श्रितदिव्यडोळं
बालं नुमः कमपि वासवरत्ननीलम्।। ३

यः श्रीधरस्मरहरादिविलोचनाञ्च-
ल्यादीयमानपवनो रमतेऽधिडोळम्।
आन्दोळनेन जननीकलितेन नन्दन्
मन्दंहसन्मनसि मेऽस्तु स नन्दसूनुः।। ४

अत्रामृतं प्रविचकास्त्यमृतार्थिनां त-
दा सेव्यमेतदिति बोधयितुं पदं स्वम्।
आस्ये निधाय रसयन्नधिरत्नडोळ-
मग्रेऽस्तु मेऽभ्ररुचिरार्भकसार्वभौमः।। ५

डोळाधिरूढमुपबर्हधृतापराङ्गं
फालान्तराकलितहीर ललन्तिकाढ्यम्।
वैयाघ्रचारुनखराञ्चितमभ्रनीलं
बालं कदा ननु पिबानि दृशा विशङ्कम्।। ६

डोळां गतस्तदनुषञ्जितरत्नगुच्छे
दृष्ट्वा स्वबिम्बमपरार्भकविभ्रमेण।

अव्यक्तजल्पदरहासमुखैर्विलासैः
दीव्यन्ममास्तु हृदि दिव्यशिशुस्सलीलम्।। ७

आकल्पितैणमदचित्रकभूतिरेख-
फालं कपोलतलबिम्बितकर्णभूषम्।
डोळाङ्गतं व्रजवधूपरिचुम्ब्यमान-
श्रीमन्मुखं कमपि दिव्यशिशुं स्मरामः।। ८

आभीरपुण्य विभवावतरोऽधिडोळं
यः श्रीधरसकळित तञ्चलनैः प्रहृष्यन्।
अत्येधितैः कलशसिन्धुतरङ्गडोळा-
न्दोळैरिवास्तु हृदि मे स किशोरमौळिः।। ९

श्रीबालकृष्णविनुतिं नवरत्नमाला-
ख्यानामिमां परिपठत्युदितादरो यः।
सत्पुत्रसम्पदमियादचलाञ्च लक्ष्मीं
श्रीकृष्णभक्ततिलकश्च भवेत् स धन्यः।। १०

।। इति श्री श्रीधरवेङ्कटेशार्य कृतौ डोळानवरत्नमालिका समाप्ता ।।